**अथास्य नामधेयं करोति वेदोऽसीति । तदस्य तद्गुह्यं नाम भवति वेद इति ॥ २६ ॥**

वेदनाम्ना व्यवहारो लोके नास्तीत्याशङ्क्याऽऽह—तदस्येति । यत्तद्वेद इति नाम तदस्य गुह्यं भवति । वेदनं,वेदोऽनुभवः सर्वस्य निजं स्वरूपमित्यर्थः ॥ २६ ॥

अथैनं मात्रे प्रदाय स्तनं प्रयच्छति यस्ते स्तनः
शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः ।
येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे
करिति ॥ २७ ॥

**अथैनं मात्रे प्रदाय स्वाङ्कस्थं स्तनं प्रयच्छति यस्ते स्तन इत्यादि-मन्त्रेण ॥ २७ ॥**

हे सरस्वति यस्ते स्तनः शशयः शयः फलं तेन सह वर्तमानो यश्च सर्वप्राणिनां स्थिति-हेत्वन्नभावेन जातो यश्च रत्नधा अन्नस्य पयसो वा धाता यश्च वसु कर्मफलं तद्विन्दतीति वसुवित् । यश्च सुष्ठु ददातीति सुदत्रो येन च स्तनेन विश्वा विश्वानि वार्याणि वरणीयानि देवादीनि भूतानि त्वं पुष्यसि तं स्तनं मदीयपुत्रस्य धातवे पानाय मदीयभार्यास्तने प्रविष्टं कुर्वित्यर्थः ॥ २७ ॥

अथास्य मातरमभिमन्त्रयते । इलाऽसि मैत्रावरुणी
वीरे वीरमजीजनत् । सा त्वं वीरवती भव याऽस्मा-
न्वीरवतोऽकरदिति । तं वा एतमाहुरतिपिता बता-
भूरतिपितामहो बताभूः परमां बत काष्ठां प्राप-
च्छ्रिया यशसा ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य
पुत्रो जायत इति ॥ २८ ॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य
चतुर्थं ब्राह्मणम् ॥ ४ ॥

---

१ च. शशयो । २ घ. ज. क इति । ३ घ. च. ज. ढ. °स्थं तनयं स्त° । ४ घ. भ. ण. शशयः । ५ क. ख. घ. छ. ढ. °यः फ° । ६ ख. छ. ढ. °न स्त° । ७ च. इडाऽसि ।

अथास्य मातरमभिमन्त्रयत इलाऽसीत्यनेन । तं वा एतमाहुरित्यनेन विधिना जातः पुत्रः पितरं पितामहं चातिशेत इति श्रिया यशसा ब्रह्मवर्चसेन परमां निष्ठां प्रापदित्येवं स्तुत्यो भवतीत्यर्थः । यस्य चैवंविदो ब्राह्मणस्य पुत्रो जायते स चैवं स्तुत्यो भवतीत्यध्याहार्यम् ॥२८॥

इति श्रीमद्बृहदारण्यकोपनिषद्भाष्ये षष्ठाध्यायस्य
चतुर्थं ब्राह्मणम् ॥ ४ ॥

इला स्तुत्या भोग्याऽसि । मित्रावरुणाभ्यां संभूतो मैत्रावरुणो वसिष्ठस्तस्य भार्या मैत्रावरुणी सा चारुन्धती तद्वत्त्वं तिष्ठसीति भार्यां संबोधयति—मैत्रावरुणीति । वीरे पुरुषे मयि निमित्तभूते भवती वीरं पुत्रमजीजनत् । सा त्वं वीरवती जीवबहुपुत्रा भव । या भवती वीरवतः पुत्रसंपन्नानस्मानकरत्कृतवतीति मन्त्रार्थः । पितरमतीत्य वर्तत इत्यतिपिता । अहो महानेष विस्मयो यत्पितरं पितामहं च सर्वमेव वंशमतीत्य सर्वस्मादधिकस्त्वं जातोऽसीत्यर्थः । न केवलं पुत्रस्यैवेयं स्तुतिरपि तु यथोक्तपुत्रसंपन्नस्य पितुरपीत्याह—यस्येति ॥ २८ ॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां षष्ठाध्यायस्य
चतुर्थं ब्राह्मणम् ॥ ४ ॥

---

( अथ षष्ठाध्यायस्य पञ्चमं ब्राह्मणम् । )

---

अथ वꣳशः । पौतिमाषीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्र औपस्वस्तीपुत्रादौपस्वस्तीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रः कौशिकीपुत्रात्कौशिकीपुत्र आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च वैयाघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः ॥ १ ॥

---

१ क. इलाऽसी° । २ क. ख. घ. ङ. च. छ. ज. झ. ढ. °हं चाऽतिं° । ३ क. छ. ढ. °मेवं त्वम° ।

आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भार-
द्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरी-
पुत्रो वात्सीपुत्राद्वात्सीपुत्रः पाराशरीपुत्रात्पाराशरी-
पुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्रो वार्कारुणीपुत्रा-
द्वार्कारुणीपुत्र आर्तभागीपुत्रादार्तभागीपुत्रः शौङ्गी-
पुत्राच्छौङ्गीपुत्रः सांकृतीपुत्रात्सांकृतीपुत्र आल-
म्बायनीपुत्रादालम्बायनीपुत्र आलम्बीपुत्रादालम्बी-
पुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रा-
न्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः
शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथी-
तरीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः क्रौञ्चिकीपुत्रा-
भ्यां क्रौञ्चिकीपुत्रौ वैदभृतीपुत्राद्वैदभृतीपुत्रः कार्श-
केयीपुत्रात्कार्शकेयीपुत्रः प्राचीनयोगीपुत्रात्प्राचीन-
योगीपुत्रः सांजीवीपुत्रात्सांजीवीपुत्रः प्राश्नीपुत्रादा-
सुरिवासिनः प्राश्नीपुत्र आसुरायणादासुरायण आसु-
रेरासुरिः ॥ २ ॥

याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुण
उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा
जिह्वावतो बाध्योगाज्जिह्वावान्बाध्योगोऽसिताद्वार्ष-
गणादसितो वार्षगणो हरितात्कश्यपाद्धरितः कश्यपः
शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः

१ घ. ठ. दर्भीपु° । २ घ. ठ. °दर्भीपु । ३ ख. ट. ड. कार्षके° । ४ ख. ट. ड. त्कार्षके° ।
५ ख. घ. ङ. ट. ठ. ड. ड. °प्राश्नीपुत्रादा° । ६ घ. छ. ज. ट. °सुरीवा° ।

कश्यपो नैध्रुविर्वाचो वागम्भिंण्या अम्भिण्यादि-
त्यादादित्यानीमानि शुक्लानि यजूꣳषि वाजसनेयेन
याज्ञवल्क्येनाऽऽख्यायन्ते ॥ ३ ॥

समानमा सांजीवीपुत्रात्सांजीवीपुत्रो माण्डूकायने-
र्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो
माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणः शा-
ण्डिल्याच्छाण्डिल्यो वात्स्याद्वात्स्यः कुश्रेः कुश्रि-
र्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायन-
स्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्र-
ह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥ ४ ॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य
पञ्चमं ब्राह्मणम् ॥ ५ ॥

---

इति वाजसनेयके बृहदारण्यकोपनिषदि षष्ठोऽध्यायः ॥ ६ ॥
इति वाजसनेयकबृहदारण्यकक्रमेणाष्ट-
मोऽध्यायः ॥ ८ ॥

---

अथेदानीं समस्तप्रवचनवंशः । स्त्रीप्राधान्यात् । गुणवान्पुत्रो भव-
तीति प्रस्तुतम् । अतः स्त्रीविशेषणेनैव पुत्रविशेषणादाचार्यपरम्परा
कीर्त्यते । तानीमानि शुक्लानीत्यव्यामिश्राणि ब्राह्मणेन । अथवा यानी-
मानि यजूंषि तानि शुक्लानि शुद्धानीत्येतत् । प्रजापतिमारभ्य यावत्पौ-
तिमाषीपुत्रस्तावदधोमुखो नियताचार्यपूर्वक्रमो[2] वंशः[3] समानमा सांजी-
वीपुत्रात् । ब्रह्मणः प्रवचनाख्यस्य । तच्चैतद्ब्रह्म प्रजापतिप्रबन्धपरम्पर-

---

१ क. °वाऽयातयामानी° । २ ग. च. ञ. झ. ढ. °र्यपर्वं । ३ क. ख. छ. झ. °शः। अं° ।

याऽऽगत्यास्मास्वनेकधा विप्रसृतमनाद्यनन्तं स्वयंभु ब्रह्म नित्यं तस्मै ब्रह्मणे नमः । नमस्तदनुवर्तिभ्यो गुरुभ्यः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

इति बृहदारण्यकोपनिषद्भाष्ये षष्ठाध्यायस्य
पञ्चमं ब्राह्मणम् ॥ ५ ॥

---

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशंकरभगवतः कृतौ बृहदारण्यकोपनिषद्भाष्ये षष्ठोऽध्यायः ॥ ६ ॥

---

सांनिध्यात्खिलकाण्डस्य वंशोऽयमिति शङ्कां निवर्तयन्वंशब्राह्मणतात्पर्यमाह—**अथेति** । विद्याभेदादतीतस्य काण्डद्वयस्य प्रत्येकं वंशभाक्त्वेऽपि नास्य पृथक्त्वभागित्वं खिलत्वेन तच्छेषत्वात् । तथा च समाप्तौ पठितो वंशः समस्तस्यैव प्रवचनस्य भविष्यतीत्यर्थः । पूर्वौ वंशौ पुरुषविशेषितौ तृतीयस्तु स्त्रीविशेषितस्तत्र किं कारणमित्याशङ्क्याऽऽह—**स्त्रीप्राधान्यादिति** । तदेव स्फुटयति—**गुणवानिति** । कीर्त्यते ब्राह्मणेनेति संबन्धः । शुक्लानि यजूंषीत्यस्य व्याख्यानमव्यामिश्राणीति दोषैरसंकीर्णानि पौरुषयत्वदोषद्वाराभावादित्यर्थः । अयातयामान्यदुष्टान्यगतार्थानीत्यर्थः । पाठक्रमेण मनुष्यादिः प्रजापतिपर्यन्तो वंशो व्याख्यातः । संप्रत्यर्थक्रममाश्रित्याऽऽह—**प्रजापतिमिति** । अधोमुखत्वं पाठक्रमापेक्षयोच्यते । तत्रापि प्रजापतिमारभ्य सांजीवीपुत्रपर्यन्तं वाजसनेयिशाखासु सर्वास्वेको वंश इत्याह—**समानमिति** । प्रवचनाख्यस्य वंशात्मनो ब्रह्मणः संबन्धात्प्रजापतिर्विद्यां लब्धवानित्याह—**ब्रह्मण इति** । तस्याधिकारिभेदादवान्तरभेदं दर्शयति—**तच्चेति** । प्रजापतिमुखप्रबन्धः प्रपञ्चः सैव परम्परा तयेति यावत् । तस्य परमात्मरूपं स्वयंभूत्वमभिदधाति—**अनादीति** । तस्यापौरुषेयत्वेनासंभावितदोषतया प्रामाण्यमभिप्रेत्य विशिनष्टि—**नित्यमिति** । आदिमध्यान्तेषु कृतमङ्गला ग्रन्थाः प्रचारिणो भवन्तीति मन्वानः सन्नाह—**तस्मै ब्रह्मण नम इति** ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

इति बृहदारण्यकोपनिषद्भाष्यटीकायां षष्ठाध्यायस्य
पञ्चमं वंशब्राह्मणम् ॥ ५ ॥

---

१ ग. °स्य प्रत्येकं भ° । २ घ. म. ण. तिप्रमु° । ३ घ. म. ण. °रूपस्व° । ४ क. ख. इ. प्रस.रि° ।

नमो जन्मादिसंबन्धहेतुविध्वंसहेतवे ।
हरये परमानन्दपरिज्ञानवपुर्भृते ॥ १ ॥
नमस्त्रय्यन्तसंदोहसरसीरुहभानवे ।
गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां बृहदारण्यकोपनिषद्भाष्यटीकायां षष्ठोऽध्यायः ॥ ६ ॥

---

समाप्तेयं सटीकशांकरभाष्योपेता बृहदारण्यकोपनिषत् ।
॥ ॐ तत्सत् ॥

---

१ क. °बन्धिविघ्नवि° । ख. घ. ङ. °बन्धिहे° । २ ज. °ध्वनवत्र्यवि° ।

# अथ बृहदारण्यकोपनिषत्कण्डिकाद्यपदानां वर्णानुक्रमः प्रारभ्यते ।

समाप्तोऽयं बृहदारण्यकोपनिषत्कण्डिकाद्य-
पदानां वर्णानुक्रमः ।

